॥ सुन्दरकाण्डरामायणनिर्णयः ॥

रामाय शाश्वतसुविस्तृतषड्गुणाय
सर्वेश्वराय बलवीर्यमहार्णवाय ।
नत्वा लिलङ्घयिषुरर्णवमुत्पपात
निष्पीड्य तं गिरिवरं पवनस्य सूनुः ॥ १॥

चुक्षोभ वारिधिरनुप्रययौ च शीघ्रं
यादोगणैः सह तदीयबलाभिकृष्टः ।
वृक्षाश्च पर्वतगताः पवनेन पूर्वं
क्षिप्तोऽर्णवे गिरिरुदागमदस्य हेतोः ॥ २॥

शैलो हरस्य गिरिपक्षविनाशकाले
क्षिप्तोऽर्णवे स मरुतोर्वरितात्मपक्षः ।
हैमो गिरिः पवनजस्य तु विक्रमार्थ-
मुद्भिद्य वारिधिमवर्धदनेकसानुः ॥ ३॥

नैवात्र विक्रमणमैच्छदविश्रमोऽसौ
निःसीमपौरुषबलस्य कुतः श्रमोऽस्य ।
आश्लिष्य पर्वतवरं स ददर्श गच्छन्
देवैस्तु नागजननीं प्रहितां वरेण ॥ ४॥

जिज्ञासुभिर्निजबलं तव भक्षमेतु
यद्यत्त्वमिच्छसि तदित्यमरोदितायाः ।
आस्यं प्रविश्य सपदि प्रविनिःसृतोऽस्मात्
देवाननन्दयदुत स्वकमेषु रक्षन् ॥ ५॥

दृष्ट्वा सुरप्रणयितां बलमस्य चोग्रं
देवाः प्रतुष्टुवुरमुं सुमनोऽभिवृष्ट्या ।
तैरादृतः पुनरसौ वियतैव गच्छन्
छायाग्रहं प्रतिददर्श च सिंहिकाख्यम् ॥ ६॥

लङ्कावनाय सकलस्य च निग्रहेऽस्याः
सामर्थ्यमप्रतिहतं प्रददौ विधाता ।
छायामवाक्षिपदसौ पवनात्मजस्य
सोऽस्याः शरीरमनुविश्य बिभेद चाशु ॥ ७॥

निःसीममात्मबलमित्यसुदर्शयानो

हत्वैव तामपि विधातृवराभिगुप्ताम् ।
लम्बे स लम्बशिखरे निपपात लङ्का-
प्राकाररूपकगिराथ च सञ्चुकोचे ॥ ८॥

भूत्वा बिडालसमितो निशि तां पुरीं च
प्राप्स्यन् ददर्श निजरूपवतीं स लङ्काम् ।
रुद्धोऽनयाऽऽश्वथ विजित्य च तां स्वमुष्टि-
पिष्टां तयानुमत एव विवेश लङ्काम् ॥ ९॥

मार्गमाणो बहिश्चान्तः सोऽशोकवनिकातले ।
ददर्श शिंशपावृक्षमूलस्थितरमाकृतिम् ॥ १०॥

नरलोकविडम्बस्य जानन् रामस्य हृद्गतम् ।
तस्य चेष्टानुसारेण कृत्वा चेष्टाश्च संविदम् ॥ ११॥

तादृक्चेष्टासमेताया अङ्गुलीयमदात्ततः ।
सीताया यानि चैवासन्नाकृतेस्तानि सर्वशः ॥ १२॥

भूषणानि द्विधा भूत्वा तान्येवासन् तथैव च ।
अथ चूडामणिं दिव्यं दातुं रामाय सा ददौ ॥ १३॥

यद्यप्येतन्न पश्यन्ति निशाचरगणास्तु ते ।
द्युलोकचारिणः सर्वे पश्यन्त्यृषय एव च ॥ १४॥

तेषां विडम्बनायैव दैत्यानां वञ्चनाय च ।
पश्यतां कलिमुख्यानां विडम्बोऽयं कृतो भवेत् ॥ १५॥

कृत्वा कार्यमिदं सर्वं विशङ्कः पवनात्मजः ।
आत्माविष्करणे चित्तं चक्रे मतिमतां वरः ॥ १६॥

अथ वनमखिलं तद्रावणस्यावलम्ब्य
क्षितिरुहमिममेकं वर्जयित्वाऽऽशु वीरः ।
रजनिचरविनाशं कांक्षमाणोऽतिवेलं
मुहुरतिरवनादी तोरणं चारुरोह ॥ १७॥

अथाशृणोद्दशाननः कपीन्द्रचेष्टितं परम् ।
दिदेश किङ्करान् बहून् कपिर्निगृह्यतामिति ॥ १८॥

समस्तशो विमृत्यवो वराद्धरस्य किङ्कराः ।
समासदन्महाबलं सुरान्तरात्मनोऽङ्गजम् ॥ १९॥

अशीतिकोटियूथपं पुरःसराष्टकायुतम् ।
अनेकहेतिसङ्कुलं कपीन्द्रमावृणोद्बलम् ॥ २०॥

समावृतस्तथाऽऽयुधैः स ताडितश्च तैर्भृशम् ।
चकार तान् समस्तशस्तलप्रहारचूर्णितान् ॥ २१॥

पुनश्च मन्त्रिपुत्रकान् स रावणप्रचोदितान् ।
ममर्द सप्तपर्वतप्रभान् वराभिरक्षितान् ॥ २२॥

बलाग्रगामिनस्तथा स शर्ववाक्सुगर्वितान् ।
निहत्य सर्वरक्षसां तृतीयभागमक्षिणोत् ॥ २३॥

अनौपमं हरेर्बलं निशम्य राक्षसाधिपः ।
कुमारमक्षमात्मनः समं सुतं न्ययोजयत् ॥ २४॥

स सर्वलोकसाक्षिणः सुतं शरैर्ववर्ष ह ।
शितैर्वरास्त्रमन्त्रितैर्न चैनमभ्यचालयत् ॥ २५॥

स मण्डमध्यगासुतं समीक्ष्य रावणोपमम् ।
तृतीय एष भांशको बलस्य हीत्यचिन्तयत् ॥ २६॥

निधार्य एव रावणो राघवस्य नान्यथा ।
युधीन्द्रजिन्मया हतो न चास्य शक्तिरीक्ष्यते ॥ २७॥

अतस्तयोः समो मया तृतीय एष हन्यते ।
विचार्य चैवमाशु तं पदोः प्रगृह्य पुप्लुवे ॥ २८॥

स चक्रवद्भ्रमातुरं विधाय रावणात्मजम् ।
अपोथयद्धरातले क्षणेन मारुतीतनुः ॥ २९॥

विचूर्णिते धरातले निजे सुते स रावणः ।
निशम्य शोकतापितस्तदग्रजं समादिशत् ॥ ३०॥

अथेन्द्रजिन्महाशरैर्वरास्त्रसम्प्रयोजितैः ।
ततश्च वानरोत्तमं न चाशकद्विचालने ॥ ३१॥

अथास्त्रमुत्तमं विधेर्मुमोच सर्वदुःसहम् ।
स तेन ताडितो हरिर्व्यचिन्तयन्निराकुलः ॥ ३२॥

मया वरा विलङ्घिता ह्यनेकशः स्वयम्भुवः ।
स माननीय एव मे ततोऽत्र मानयाम्यहम् ॥ ३३॥

इमे च कुर्युरत्र किं प्रहृष्टरक्षसां गणाः ।
इतीह लक्ष्यमेव मे स रावणश्च दृश्यते ॥ ३४॥

इदं समीक्ष्य बद्धवत् स्थितं कपीन्द्रमाशु ते ।
बबन्धुरन्यपाशकैर्जगाम चास्त्रमस्य तत् ॥ ३५॥

अथ प्रगृह्य तं कपिं समीपमानयंश्च ते ।
निशाचरेश्वरस्य तं स पृष्टवांश्च रावणः ॥ ३६॥

कपे कुतोऽसि कस्य वा किमर्थमीदृशं कृतम् ।
इतीरितः स चावदत् प्रणम्य राममीश्वरम् ॥ ३७॥

अवेहि दूतमागतं दुरन्तविक्रमस्य माम् ।
रघूत्तमस्य मारुतिं कुलक्षये तवेश्वरम् ॥ ३८॥

न चेत् प्रदास्यसि त्वरन् रघूत्तमप्रियां तदा ।
सपुत्रमित्रबान्धवो विनाशमाशु यास्यसि ॥ ३९॥

न रामबाणधारणे क्षमाः सुरेश्वरा अपि ।
विरिञ्चशर्वपूर्वकाः किमु त्वमल्पसारकः ॥ ४०॥

प्रकोपितस्य तस्य कः पुरः स्थितौ क्षमो भवेत् ।
सुरासुरोरगादिके जगत्यचिन्त्यकर्मणः ॥ ४१॥

इतीरिते वधोद्यतं न्यवारयद्विभीषणः ।
स पुच्छदाहकर्मणे न्ययोजयन्निशाचरान् ॥ ४२॥

अथास्य वस्त्रसञ्चयैः पिधाय पुच्छमग्नये ।
ददुर्ददाह नास्य तन्मरुत्सखो हुताशनः ॥ ४३॥

ममर्ष सर्वचेष्टितं स रक्षसां निरामयः ।

बलोद्धतश्च कौतुकात् प्रदग्धुमेव तां पुरीम् ॥ ४४॥

ददाह चाखिलां पुरीं स्वपुच्छगेन वह्निना ।
कृतिस्तु विश्वकर्मणोऽप्यदह्यतास्य तेजसा ॥ ४५॥

सुवर्णरत्नकारितां स राक्षसोत्तमैः सह ।
प्रदह्य सर्वशः पुरीं मुदान्वितो जगर्ज वै ॥ ४६॥

स रावणं सपुत्रकं तृणोपमं विधाय वै ।
तयोः प्रपश्यतोः पुरीं विधाय भस्मसाद्ययौ ॥ ४७॥

विलङ्घ्य चार्णवं पुनः स्वजातिभिः प्रपूजितः ।
प्रभक्ष्य वानरेशितुर्मधु प्रभुं समेयिवान् ॥ ४८॥

रामं सुरेश्वरमगण्यगुणाभिरामं
सम्प्राप्य सर्वकपिवीरवरैः समेतः ।
चूडामणिं पवनजः पदयोर्निधाय
सर्वाङ्गकैः प्रणतिमस्य चकार भक्त्या ॥ ४९॥

रामोऽपि नान्यदनुदातुममुष्य योग्यम्-
अत्यन्तभक्तिभरितस्य विलक्ष्य किञ्चित् ।
स्वात्मप्रदानमधिकं पवनात्मजस्य
कुर्वन् समाश्लिषदमुं परमाभितुष्टः ॥ ५०॥

इति श्रीमदानन्दतीर्थीयमहाभारततात्पर्यनिर्णये रामचरिते
हनुमत्प्रतियानं सुन्दरकाण्डकथानिर्णयः ॥